*हिन्दी-अनुवाद-* *यदि शेषनाग में अधिक बुद्धि स्फुरित होती है तो (उसके स्वामी) विष्णु ने क्यों उस कपट से युद्धवेग के द्वारा स्वयं असुरवधों के प्रति व्यग्रता को धारण किया? यदि वाचस्पति (बृहस्पति) सचमुच विपुल बुद्धि वाले सुने जाते हैं तो क्यों इन्द्र के दैत्यों के द्वारा लूट कर बन्दी वनाये जाने के कारण तिरस्कार से कृष्णवर्ण की इन्द्र लक्ष्मी हो गयीं? ।।१६।।*

सम्प्रति प्रेषिताश्च प्रतिदिशं सेनापतय इति। (कर्णं दत्त्वा आकाशमवलोक्य)

*हिन्दी-अनुवाद-* *इस समय सभी दिशाओं से सेनापतियों को भेज दिया है। (कान लगाकर। आकाश की ओर देख कर।)*

अमरसरिदुपान्त भ्रान्तचक्राह्वचक्र
भ्रममुरसिजभारैः काश्चन व्यञ्जयन्त्यः।

किमु विततनितम्बाभोगसंवाहवेग
स्खलनमुखरचञ्चत्काञ्चयः संचरन्ति।।१७।।

*हिन्दी-अनुवाद-* *कुचों के भार से या स्थूल कुचों के कारण गंगा नदी के किनारे भ्रमण करते हुए चकवा पक्षियों के समूह का भ्रम उत्पन्न करती हुई तथा विस्तृत नितम्ब प्रदेश के सन्चालन के वेग से मुखरित एवं चलायमान करधनी वाली कुछ युवतियाँ टहल रही हैं ।।१७।।*

अग्रतो विलोक्य सविस्मयम्

*(आगे देखकर, आश्चर्य के साथ )*

तुलाकोटिक्काण प्रणयिभिरवाप्तैरिव गते
र्विलासे शिष्यत्वं भवनकलहंसैरनुगता

सुधामुग्धैरङ्गैः शशिन इव गर्भाद्विगलिता
कुरङ्गाक्षी केयं तिलकयति लीलावनभुवम् ।।१८।।

*हिन्दी-अनुवाद-* *तुलना की कोटिवाले शब्द के प्रेमी घरेलू राजहंस जिसकी चाल की भंगिमा प्राप्त करने के लिए शिष्य बन गये हैं, उनके द्वारा अनुगमन की जाती हुई तथा अमृत के समान मुग्धकारी अंगों से मानों चन्द्रमा से टपकी हुई, यह कौन मृगनयनी लीलावन की भूमि को तिलक के समान बना रही हैं ।।१८।।*

*(पुनरवलोक्य)*
*(फिर देखकर)*

उच्चञ्चुपञ्जरचकोरकचर्व्यमाण-
पूर्णेन्दुसुन्दर तराननचन्द्रिकेयम्।

देव्याः कथं परिजनप्रमदाजनेन
नीतैव मन्दिर ममन्दकुतूहलायाः।।१६।।

*हिन्दी-अनुवाद-* *ऊपर की ओर चोंच तथा देह को उठाए हुए चकोर पक्षी द्वारा आस्वादित पूर्णचन्द्र की अपेक्षा अधिक सुन्दर मुखचन्द्रवाली यह बाला प्रचुर कुतूहल वाली महारानी की सेविकागण द्वारा क्या मन्दिर में ही पहुँचा दी गयीं? ।।१६।।*

*(विचिन्त्य) (सोचकर)*

एताः काश्चन निश्चलालकलताश्चिन्तातिरेकश्रम-
स्विद्यद्भालतटा यदम्बरतले भ्राम्यन्ति वामभ्रुवः।

श्री चालुक्यकुलोद्वहे कलयति त्र्यक्षोपचर्यामिह
स्नस्ता काचन लिङ्गलङ्घनवशात्तद्वेद्मि विद्याधरी।।२०।।

*हिन्दी-अनुवाद-* *ये जो निश्चल केशलता वाली तथा चिन्ता के अतिरेक के कारण श्रम से पसीना छोड़ते हुए , ललाट तट वाली कुछ सुन्दरियाँ आकाश में घूमती हैं, उनमें से कोई (एक) शिवलिङ्ग के लंघन करने के कारण अधः पतित होकर यहाँ श्री चालुक्य वंश में*

*विवाह करने के लिए शिव की परिचर्या कर रही है, उसे मैं विद्याधरी समझता हूँ ।।२०।।*

**(सचमत्कारम्) सत्यस्वप्नः सांप्रतममात्यः। तेनैवंविधेन व्यतिकरेण मां प्रति भर्तुश्चक्रवर्तित्वमभिहितमासीत्। तत्परिजनमुखेन।**

*हिन्दी-अनुवाद- (चमत्कार के साथ) अब महामंत्री का स्वप्न सत्य हो गया । उन्होंने इस प्रकार के सम्बन्ध से स्वामी का चक्रवर्ती होना मुझसे बताया था । इसलिए सेवक के मुख से –*

**जानीते निपुणा कथंचन मनाग्देवी च सीता यथा**
**वारंवारमसौ तथा नरपतेः संदर्शनीया मया।**

**अन्योन्यं हृदये तयोः स्पृहयतोर्भावेऽति भूमिं गते**
**पर्याप्तः कुसुमायुधः स भगवान्पारावताराय नः।।२१।।**

*हिन्दी-अनुवाद- निपुण तथा सीता जैसी (पतिव्रता) महारानी किस प्रकार कुछ-कुछ जान गयी हैं। अब मुझे बार बार उसे राजा को दिखाना चाहिए। परस्पर कामना करने वाले उन दोनों के हृदय में प्रेमभाव के पराकाष्ठा पर पहुँच जाने पर हमें पार उतारने के लिए भगवान कामदेव पर्याप्त हैं ।।२१।।*

**तद्भवतु। सांप्रतमेव।**

*तो हो जाए। अभी ही।*

**लीलोद्याने भवनवलभौ रत्नवातायनेषु**
**क्रीडासौधे तदनु मदनोद्यानशालासुबालाम्।**

**इन्दोर्गर्भे चिरमिव धृतैरङ्ककैस्तामनङ्ग**
**स्याङ्गावाप्तौपुनरिव नवां सिद्धिमालेखयामि।।२२।।**

**हिन्दी अनुवाद-** *क्रीड़ा करने के उपवन में, महल के सर्वोच्च भाग में, रत्नों के बने झरोखों में, खेलों के महल में, तत्पश्चात् कामवन की शालाओं में उस बाला को चन्द्रमा के भीतर चिरकाल से धारण किये अंगों से कामदेव के अङ्गों की पुनः प्राप्ति के लिए नूतन सिद्धि के रूप में चित्रित कर रहा हूँ।।२२।।*

*(नेपथ्ये) (नेपथ्य में)*

**जयति विश्रामावसरो देवस्य। संप्रति**

*महाराज के विश्राम करने के अवसर की जय हो*

*इस समय*

**अन्योन्यं लज्जयेव प्रतिफलनमिषात्कुट्टिमात्तर्विशन्तः**
**पातालं भूमिपालाः किसलयित शिखाः पाणिबन्धैप्रणम्य**

**गच्छन्ति च्छत्रखण्डस्तबकित ककुभश्चित्रवादित्र जैत्र**
**ध्वाना कृष्ट प्रहृष्ट प्रचुर पुरवधू वीक्ष्यमाणा गृहाणि।।२३।।**

**हिन्दी-अनुवाद-** *मानों परस्पर लज्जा के कारण (रत्नमय) पक्के फर्श के भीतर पड़ने वाली परछाईं के बहाने पाताल में प्रवेश करने वाले राजा लोग नवपल्लव के अग्रभाग जैसे हाथों को जोड़कर प्रणाम करके छातों के समूहों से दिशाओं को गुच्छाकार बनाते हुए तथा चित्र विचित्र वाद्यों एवं विजय जयकार की ध्वनियों से आर्कषित एवं प्रमुदित अनेक नगर बधुओं के द्वारा देखे जाते हुए (अपने अपने) घरों को जा रहे हैं।।२३।।*

**अपि च-** *और भी*

**पञ्चास्रस्य त्रिलोकीहठ विजय महारम्भ संभारदीक्षा-**
**माचक्षाणा इवोच्चैर्जघन झणझणन्मेखलाचक्रवालैः।**

**ध्वस्ताम्भोजैः सुमिक्षं दिशि दिशि विशदैर्दर्शयन्त्यश्चवक्त्रै-**
**श्चन्द्राणां सान्द्रलीला तिलकित गतयो निर्गता वाररामाः।।२४।।**

*हिन्दी-अनुवाद-* विशाल नितम्बों पर झन झन शब्द करती हुई, करधनी के घेरोंसे मानो कामदेव के तीनों लोकों पर हठपूर्वक विजय करने के महान आरम्भ की अधिकता की दीक्षा का उपदेश करती हुई तथा कमलों को परास्त करने वाले मुखों से प्रत्येक दिशा में सुभिक्ष (अन्न का बाहुल्य) ज्ञापित करती हुई और चन्द्रों की सघन लीलापूर्वक उत्तम गति जैसी गति वाली वेश्यायें (घरोंसे) निकल पड़ीं ।।२४।।

**किं च।**

**विश्रान्तो मुरजध्वनिर्जलधर ध्वानानुकारी गताः**
**सङ्गीताङ्गणतस्तरङ्गित मुखज्योत्स्नारसा लासिकाः।**

**चण्डः केलिशिखण्डिनां न विरमत्यद्यापि नृत्योत्सव-**
**श्चञ्चच्चञ्चव एव किं च विचरन्त्यन्तश्चकोराङ्गनाः।।२५।।**

*हिन्दी-अनुवाद-* और भी

मेघ की ध्वनि का अनुकरण करने वाला मृदंग का शब्द संगीत के प्रांगण से लहराती हुई मुखज्योति के रस से युक्त नर्तकियाँ चली गयीं। क्रीड़ा मयूरों का प्रचण्ड नृत्योत्सव अभी भी नहीं रुक रहा है। अभी भी चोंच चलाती हुई चकोरियाँ अन्तःपुर में विचरण कर रही हैं।।२५।।

**प्रणिधिः-** यत्पुनर्देवो विश्राममण्डपमलंकृतवांस्तन्नून मेतद्दर्न जन्मा मन्मथावेग एव विविक्तस्थानस्थितिमुपदिशति। तद्गत्वा यथोचितं विरचयामि। (इति निष्क्रान्तः)

**गुप्तचर-** जिसलिए महाराज ने विश्राममण्डप को अलंकृत किया है, इसलिए निश्चित ही इसके देखने से उत्पन्न काम का आवेग ही एकान्त स्थान में रहने कां उपदेश दें रहा है। इसलिए जाकर यथोचित रचना करता हूँ।

*(यह कह कर चला गया)*
*शुद्ध विष्कम्भक समाप्त।*

*(ततः प्रविशति राजा विदूषकश्च।)*
*(राजा विदूषक के साथ प्रवेश करता है।)*

**राजा-** *(सौत्सुक्यम्) (उत्सुकता के साथ)*

**धातुस्तन्मुखवर्तनाफलहकः श्यामावधूवल्लभ-**
**स्तल्लेखोद्यत तूलिकाग्र गलिकास्तारा: सुधाविप्रुषः।**

**तल्लावण्यरसस्य शेषममला सा शारदी कौमुदी।**
**तद्भ्रूनिर्मिति मानसूत्रमपि तच्चापं मनोजन्मनः।।२६।।**

**हिन्दी-अनुवाद-** *(सृष्टि करने वाले) विधाता का उस (मेरी देखी हुई बाला) के निर्माण कालिक मुख के रखने का तख्ता तरूणी स्त्रियों का प्यारा है। उसकी रचना के लिए उद्यत कूँची के अग्रभाग से चुए हुए अमृतकण तारे हैं। उसके सौन्दर्य रस का शेष निर्मल शरद ऋतु की चाँदनी है। उसकी भौंहों के निर्माण में नापने का सूत्र भी कामदेव का प्रसिद्ध धनुष है। ।।२६।।*

***अपि च-***

**मज्जन्तीव दृशः कुरङ्गकदृशो लीलाविलासोर्मिषु**
**भ्रूलेखा सृजतीव विभ्रमशतैः कामाय दामावलिम्।**

**लावण्यामृतनिर्झरः स्नपयतीवङ्गानि किं चाधर**
**स्तारां सिञ्चति पद्मरागकिरणोत्सेकैरिवैकावलीम्।।२७।।**

**हिन्दी-अनुवाद-** *और भी,*

*मृगनयनी की लीलाविलास रूपी लहरों में आँखें डूब सी रही हैं। (उसकी) भौहों की रेखा सैकड़ों प्रकार की कामकेलियों द्वारा कामदेवपुष्पमालावली रच रही हैं। (उसके) सौन्दर्य रूपी अमृत*

*का झरना अंगों को नहला सा रहा हैं और (उसका) अधर मोतियों की माला को लालमणि की किरणों के प्रवाह से सींच सा रहा है।।२७।।*

**अपि च-**

त्रिवलिवलित लीलालोलवेणी कलापं
किमपि रसविभूतेस्तिर्यगा केक राक्षम्।

कलित कुटिलकण्ठं दर्शनोत्कण्ठ यास्या
लिखित मिव ममान्तस्तन्मुखं मन्मथेन।।२८।।

**हिन्दी-अनुवाद-** *और भी*

*त्रिवली पर पड़ने वाली लीलापूर्वक चञ्चल बालों की चोटी से युक्त, रस की विभूति के कारण कुछ तिरछी और ऐंची आँखों से युक्त तथा देखने की उत्कण्ठा से उस (बाला) का वह ग्रीवा को वक्र किए हुए उसके उस मुख को कामदेव ने मेरे अन्तःकरण में चित्रित कर दिया हैं।।२८।।*

**विदूषक-** *भो, किं वि पुच्छामि।*

**संस्कृत छाया-** *भोः किमपि पृच्छामि।*

**हिन्दी-अनुवाद-** *अजी! मैं कुछ पूछता हूँ।*

**राजा-** *(तदवधीरणेन)*

विधत्ते निःसेकं सहज रमणीयस्तरूणिमा
वपुर्वल्लीं चित्रैः कवचयति लीला किसलयैः।

विलासव्यापारः किमपि कमलोस्थो नयनयो-
रनङ्गं तन्व्यङ्ग्या स्त्रिभुवनजिगीषुं रचयति।।२९।।

**हिन्दी-अनुवाद-**

**राजा-** *(उसकी अवहेलना से)*

*सुन्दरी का स्वभावतः रमणीय यौवन देहलता को सींचने-सँवारने से परे बनाता है और बहुरंगी लीलारूपी नव पल्लवों से कवचित (सुरक्षित) करता है। नेत्र कमलों में स्थित अवर्णनीय विलास-चेष्टा अनंग (काम) को तीनों लोक पर विजय करने का इच्छुक बनाती है।।२६।।*

**विदूषक-** *भो, का एसा लीलावणप्पवेसे पिअवअस्सेण दिट्ठा।*

**सं० छाया-** *भोः, कैषा लीलावनप्रवेशे प्रियवयस्येन दृष्टा।*

**हिन्दी-अनुवाद-** *अजी ! लीलावन में प्रवेश करने पर प्रियमित्र ने किसको देखा?*

**राजा-**

ध्यानान्ते विधिना प्रणम्यन्वरणौ चन्द्रार्धमौलेरहं
कैश्चिज्जप्य पदैः प्रदक्षिणयितुं यावत्स्ममभ्युद्यतः।

तावत्काचिदनङ्गजङ्गमपुरीवाग्रे मनोग्राहिणी
रम्भास्तम्भमनोहरोरूयुगला बाला भवच्चक्षुषोः।।३०।।

**हिन्दी-अनुवाद-** *ध्यान के अन्त में मैं शंकर के चरणों को विधिपूर्वक प्रणाम करके कुछ जपनीय पदों से प्रदक्षिणा करने के लिए ज्यों ही तैयार हुआ, त्यों ही कामदेव की जङ्गमपुरी के समान मन का आकर्षण करने वाली तथा कदली स्तम्भ के समान सुन्दर दोनों जाँघों वाली कोई बाला आँखों के सामने हो गयी ।।३०।।*

स्वप्नोऽसौ किमुतेन्द्रजालमपरं किं वा किमप्यद्भुतं
यत्सा कान्तितरङ्गिताङ्गलतिका दृष्टा कुरङ्गेक्षणा।

उल्लेखः स नवीन एव सुमतेः कस्यापि रूपे विधेः।
संवादोऽपि न यस्य पङ्कजशशिज्योत्स्नामृणालादिभिः।।३१।।

*हिन्दी-अनुवाद-* *क्या वह स्वप्न था या दूसरा इन्द्रजाल या कोई अद्भुत वस्तु जो वह कान्ति से लहराती हुई अंगलता वाली मृगनयनी देखी गयी। रूप में वह किसी विधाता की सुमति की नवीन ही देन है, जिसकी तुलना कमल, चन्द्रमा, प्रकाश, तथा मृणाल आदि से नहीं की जा सकती ।।३१।।*

*विदूषक-* *भो, एदस्स उज्जाणप्पदेसस्स किं करीअदु जत्थ अणत्थो एरिसो समावडिदो।*

*सं० छाया-* *भोः, एतस्योद्यानप्रदेशस्य किं क्रियतेयत्रानर्थ ई दृशः समापतितः।*

*हिन्दी-अनुवाद-* *अजी, इस उद्यान-प्रदेश से क्या करना है जहाँ ऐसा अनर्थ आ पड़ा है।*

*राजा-* *मूर्ख,*

**तदेकं देवस्य स्पशतु मदनस्यास्पदपदं**
**लतास्तास्तत्रत्याः स्तबकयतु चैत्रः प्रतिदिनम्।**

**असौ दृष्टा यत्र क्षणममललावण्यसरसी**
**जगन्नेत्राचम्यं किमपि दधती कान्तिसलिलम्।।३२।।**

*हिन्दी-अनुवाद-* *मूर्ख, अकेला वह (उद्यान) कामदेव के निवासस्थल का स्पर्श करे। वहाँकी लताओं को मधुमास (वसन्त-फूल के) गुच्छों से प्रतिदिन युक्त रखे, जहाँ निर्मल सौन्दर्य की सरसी (सरोवर) संसार के नेत्रों के लिए आचमन करने योग्य अनिर्वचनीय कान्ति जल धारण करती हुई क्षणभर के लिए देखी गयी ।।३२।।*

*विदूषक-* *भट्टिणो संदावदाअणं ति भणाभि।*

*सं० छाया-* *भर्तुः संतापदायकमिति भणाभि।*

*हिन्दी-अनुवाद-* *स्वामी के लिए सन्तापदायक है, ऐसा मैं कहता हूँ।*

राजा- सखे,

चान्द्री वर्तिर्नयन युगले जीवलोकस्य सैका
सा साम्राज्ये कुसुमधनुषः कीर्तिहेतुः पताका।

तत्प्राप्त्याशा विवशमनसा केनचित्तप्यते चे-
न्निः संबन्धं कथयतु भवान्कस्तदीयोऽपराधः।।३३।।

हिन्दी-अनुवाद- मित्र,

*वह एक मात्र बाला लोगों के युगल नेत्रों में चन्द्रमा की बत्ती या अंजन (के समान) है। वह कामदेव के यश की हेतुभूत पताका है। उसकी प्राप्ति की आशा से पराधीन मन वाला कोई यदि ताप का अनुभव करता है तो आप ही सम्बन्ध रहित होकर बताइए कि (इसमें) उसका क्या अपराध है? ।।३३।।*

विदूषक- *(छोटिकां दत्त्वा।) जइ एव्वं अत्थि विवेओ ता कीस ण विरज्जीअदि।*

सं० छाया- *यद्येवमस्ति विवेकस्तत्कुतो न विरज्यते।*

हिन्दी-अनुवाद- *(चुटकी बजाकर) यदि ऐसा विवेक है तो विरक्त क्यों नहीं हो जाते?*

राजा- *अनभिज्ञोऽसि। कथ्यते। पश्य।*

रागः कस्यचिदेति चेतसि पदं यः काकतालीयतः
कस्यांचिन्न विवेकवारिविसरैर्धौतोऽपि निर्यात्यसौ।

माञ्जिष्ठादपि सोऽन्य एव किमपि स्थैर्यास्पदं मन्मथे-
नावर्त्येव निजेन बाण शिखिना चित्तैक्यमापादितः।।३४।।

राजा - *तुम अनभिज्ञ हो। कहता हूँ! देखो!*

*हिन्दी-अनुवाद-* जो अनुराग काकतालीय न्याय से किसी (पुरूष) के चित्त में किसी (स्त्री) के प्रति स्थान प्राप्त कर लेता है, वह विवेक रूपी जल के फैलाव से धुलने पर भी नहीं निकलता है। वह मजीठ के रंग से भी भिन्न कुछ और स्थिरता को प्राप्त करके कन्दर्प के द्वारा मानों दुहराया जाकर अपने बाण के अग्रभाग से चित्तों की एकता को प्राप्त करा देता है ।।३४।।

*विदूषक-* अध किं ति देवी दुम्मणायन्ति व्वमये लक्खिदा।

*छाया-* अथ किमिति देवी दुर्भनायमानेव मया लक्षिता।

*हिन्दी-अनुवाद-* अच्छा तो महारानी को मैंने उदास (खिन्नचित्त) सा क्यों देखा?

*राजा-* शृणु। निवेदयामि।

अद्योद्याने मरकतमयीं वापिकामुत्तरेण
स्वप्ने दृष्टा प्रकृतिमधुरा माधवीमण्डपान्तः।

काप्येणाक्षी रतिरिव मया विप्रयुक्ता स्मरेण
स्मारं स्मारं किमपि दधती दुःसहा मोहनिद्राम्।।३५।।

*हिन्दी-अनुवाद-* राजा - सुनो ! बताता हूँ ।

आज उद्यान में मरकतमणि निर्मित बावड़ी के उत्तर माधवी लता के मण्डप में मधुर स्वभाव वाली किसी मृगनयनी को जो कन्दर्प से वियुक्त रात्रि के समान कुछ बारबार स्मरण करके दुःसह मोहनिद्रा धारण कर रही थी, स्वप्न में मैंने देखा ।।३५।।

*विदूषक-* तदो।

*सं० छाया-* ततः।

*हिन्दी-अनुवाद-* तब क्या हुआ?

राजा-

अम्बत्रयम्ब कपक्ष्मलाक्षि भगवन्विश्वैक वीर स्मर
स्मर्तव्या जननान्तरेऽपि युवयोः कारूण्यलेशादहम्।
अस्मिञ्जन्मनि तावदुन्मद सुरस्तम्बेरमाकृत्रिम
क्रीडामन्दगतिः स सुन्दर्वपुर्नो नेत्रमैत्रीं गतः।।३६।।

**हिन्दी-अनुवाद-** *माता! तीनों आँखों में सुन्दर बरौनी से युक्त नेत्रवाली! भगवन्! विश्व में एक मात्र वीर! कन्दर्प! आप दोनों की कृपा के सम्बन्ध से मैं दूसरे जन्म में भी स्मरण करने योग्य हूँ। इस जन्म में तो मदमस्त ऐरावत की स्वाभाविक क्रीड़ाकालिक मन्दगति के समान चाल वाले उन सुन्दर शरीरधारी से नेत्र-मिलन नहीं हुआ ।।३६।।*

एवं पुनः पुनरुदीर्य विदीर्यमाणं
वज्राग्रभिन्नमिव सा हृदयं दधाना।
मोहं गता कुचतटे नयनाम्बुलेशै-
रासूत्रित त्रिचतुरापरहारलेखा।।३७।।

**हिन्दी-अनुवाद-** *इस प्रकार बार बार कह कर वज्र के अग्रभाग से फाड़े हुए के समान विदीर्ण होते हुए हृदय को धारण करती हुई तथा कुचतट पर आँसू के (गिरनेके) सम्बन्ध से मानों सूत्राकार तीन चार अन्य हारलेखाओं से युक्त होती हुई वह मूर्च्छित हो गयी।।३७।।*

**विदूषक-** हद्धी हद्धी पमादो। संकडे पडिदा महाणुभावा तदो।

**सं० छाया-** *हा धिक् हा धिक् प्रमादः। संकटे पतिता महानुभावा। ततः।*

**हिन्दी-अनुवाद-** *हाय धिक्कार है, हाय धिक्कार है।*

*प्रमाद (असावधानी) हो गया। आदरणीया (बाला) संकट में पड़ गयी । तब क्या हुआ?*

*राजा-*

अथ कथमपि संज्ञां प्राप्य दीर्घं श्वसन्ती
कुचपरिसरनृत्यत्तारहारावली का।
विचकिल वनगुल्मे नूतनीभूत वल्ली
वलयनिगलिता सा पाशबन्धे प्रवृत्ता।।३८।।

*हिन्दी-अनुवाद-* *अनन्तर कुचों के परिसर (तट) पर नाचती हुई ऊँची हारावली वाली उसने (बाला ने) किसी तरह चेतना पाकर लम्बी साँस लेती हुई, मदन वृक्षों के वनों के झुरमुट में नयी लता का फन्दा बनाकर गले में डाल लिया और वह फाँसी पर लटकने जा रही थी।।३८।।*

*विदूषक-* *(हस्तमुद्यम्य) अब्बह्मण्णम्, अब्बह्मण्णम्।*

*सं० छाया-* *अब्रह्मण्यमब्रह्मण्यम्।*

*हिन्दी-अनुवाद-* *(हाथ उठा कर) अनर्थ हो गया, अनर्थ हो गया ।*

*राजा-* वैधेय, स्वप्नविधिरयम्।

*हिन्दी-अनुवाद-* *मूर्ख, यह स्वप्न की बात है।*

*विदूषक-* *तदो।*

*सं० छाया-* *ततः।*

*हिन्दी-अनुवाद-* *तब क्या हुआ ?*

*राजा-*

विरमरमणि प्राणत्यागे धृता किमिति स्पृहा
ननु भगवतः कंदर्पस्य त्वमुच्छ्वसितान्तरम्।
इति शशिमुखीमुक्त्वा यावद्बिभर्मि पटाञ्चले
चटुलरशना तूर्णं तावद्गता क्वचिदेव सा।।३६।।

अनन्तरमिदं जातम्। अस्ति च स्वप्नदृष्टजनस्य संवादः। तन्न जाने किं भविष्यति।

**हिन्दी-अनुवाद-** हे रमणी ! रुक जाओ! प्राण त्यागने की इच्छा क्यों की है? तुम निश्चित ही भगवान कामदेव की दूसरी साँस या प्राण हो। इस प्रकार चन्द्रमुखी से कह कर मैं ज्यों ही उसका आँचल पकड़ता हूँ, त्यों ही वह चन्चल करधनी वाली शीघ्र ही कहीं चली गयी ।।३६।।

यह बाद में हुआ! स्वप्न में देखे गए प्राणी की समानता (समान रूप वाली स्त्री यहाँ) है। इसलिए नहीं जानता हूँ कि क्या होगा ?

**विदूषक-** कल्लाणपिसुणं एदं सव्वं भवदित्ति किं अण्णम्। अविण्णादं देवीए।

**सं० छाया-** कल्याणपिशुनमेतत्सर्वं भवतीति किमन्यत् अपि ज्ञातं देव्या।

**हिन्दी-अनुवाद-** यह सब तो कल्याण का सूचक है, दूसरा क्या (होगा) क्या महारानी ने जान लिया है?

**राजा-** अथ किम्?

**हिन्दी-अनुवाद-** और क्या?

**विदूषक-** परूखक्खरं आलविअ ण किं पि अण्णं आ अरिदम्।

**सं० छाया-** परूषाक्षरमालप्य न किमप्यन्यदाचरितम्।

**हिन्दी-अनुवाद-** कठोर शब्द बोल कर कुछ और व्यवहार तो नहीं किया ?

**राजा-** नो किञ्चित्परूषाक्षरं निगदितं नो दर्शितः संभ्रमः
कासावित्युपहासगर्भितरूषा प्रश्नोऽपि नाविष्कृतः।

निःश्वासः परिवृत्त्य किं तु शनकैः श्यामीकृत प्रज्वल
न्नानारत्नमय प्रदीपकिरणश्रेणिर्विमुक्तस्तया।।४०।।

**हिन्दी-अनुवाद-** कठोर शब्द कुछ नहीं कहा, विक्षोभ नहीं दिखाया । 'वह कौन है'? इस उपहास गर्भित क्रोध से प्रश्न भी नहीं किया किन्तु धीरे से करवट बदल कर जलते हुए अनेक रत्नमय प्रदीपों की किरणपंक्ति को काला बनाने वाली (उसने) लम्बी साँस छोड़ी ।।४०।।

**विदूषक-** एस ज्जेव्व कराला गरलकण्ठी। अहवा तुज्झ किं जादम्। तुअं लुलुल्लरेहिं बोलेहिं पाअपडणेहिं पुणो पि अप्पवसं करेसि। अहं जेव्व एक्कोणिब्भच्छिआमि। एदस्स दुट्ठबह्मणस्स एदं खु सव्वं विलसिदं त्ति।

**सं० छाया-** एषैव कराला गरल ग्रन्थिः। अथवा तव किं जातम्। त्वं मधुरैर्वचनैः पात पतनैः पुनरप्यात्म वशां करिष्यसि। अहमेवैकोनिर्मर्त्स्ये। एतस्य दुष्ट ब्राह्मणस्यैतत्खलु सर्वं विलसितमिति।

**हिन्दी-अनुवाद-** यही भयंकर विष की गाँठ है अथवा तुम्हारा क्या हुआ (क्या बिगड़ा) तुम तो मधुर वचनों से तथा पैरों पर गिरने से पुनः देवी को अपने अधीन कर लोगे। मैं ही अकेला डाँटा जाऊँगा कि इसी दुष्ट ब्राह्मण की यह सब करतूत है।

**राजा-** कथं न जातम्।

**न यस्मिन्दाक्षिण्यं परिणत मियत्त्वस्य विषये**
**विकल्पाधिष्ठानं तदपि विहितं प्रेम सुदृशः।**

**इतः शून्यं चेतः स्मरकितव संसार चकितं**
**न जानीमो धातुः किमधिकरणः सूत्रणविधिः।।४१।।**

**हिन्दी-अनुवाद-** राजा - क्यों नहीं हुआ ?

जिसमें सुजनता निश्चित परिमाण के विषय में परिपक्व नही है तो भी सुनयना का प्रेम विकल्प का अधिष्ठान बनाया गया है। इससे (मेरा) चित्त धूर्त्त कन्दर्प के सञ्चार से भयभीत है। नहीं

जानता हूँ कि विधाता की क्रम में बाँध कर रखने की विधि का क्या आधार है ? ।।४१।।

(नेपथ्ये)

(नेपथ्य में)

सुखाय कुसुम समय समारम्भो देवस्य। सम्प्रति हि

**रक्ताशोक द्रुमाणां लसति किसलयश्रेणिरार्द्रापराध**
**प्रेयः शौण्डीर्यपीत द्रविड वरवधू चारु बिम्बाधरश्रीः।**

**उन्मेषश्चम्प का नाम जरठमरठी गण्डपाली विलासः**
**कर्णाटी हास्यलेशान्विच किल मुकुल स्फूर्तयो वार्तयन्ति।।४२।।**

***हिन्दी-अनुवाद-*** *वसन्त ऋतु का आरम्भ महाराज के सुख के लिए हो। इस समय- लाल अशोक वृक्षों की नव पल्लव पंक्ति नये अपराध के प्रेम और उदण्डता से युक्त एवं पीत रंग के द्रविड़ देशवासी, वरबधू की सुन्दर बिम्बाफल जैसी अधर शोभा को धारण कर रही है। चम्पा का विकास युवती मराठी स्त्रियों के कपोलस्थल के विलास को धारण कर रहा है। मदन वृक्ष की कलियों के विकास कर्णाटक की स्त्रियों के हास्यों को पुष्ट करते हैं। ।।४२।।*

**कान्ते नूतन चूतमञ्जरि धनुर्दण्डेऽधुनासंदध-**
**त्कंदर्पः कलकण्ठपञ्चम रव ब्रह्मास्त्रमव्याहतम्।**

**दोर्युग्मं वलयी करोति युगपत्कर्तुं त्रिलोकोपरि**
**स्वामाज्ञां रतिवक्त्रपत्रशबलं मौर्वीकिणाङ्काङ्कितम्।।४३।।**

***हिन्दी-अनुवाद-*** *इस समय मनोहर नवीन आम्रमन्जरी रूप धनुष के डंडे में कोकिल के पञ्चम स्वर रूपी अव्याहत (व्याघात या बाधा रहित) ब्रह्मास्त्र को जोड़कर कन्दर्प, तीनों लोक पर एक साथ अपना शासन करते हुए, रति के मुख पर बनाए गये विशेष प्रकार के*

*चिह्न या बूटे आदि के समान बहुरंगी प्रत्यन्चा के घर्षण से होने वाले किण (घट्ठे) के चिह्न से अंकित अपनी दोनों भुजाओं को कंकण के समान कर रहा है।।४३।।*

*विदूषक-* *(अन्यतः)*

कावेरीणालि एरीतरलणनिउणा णम्मदाणम्मआरा
कञ्चीए चुम्बणद्दा तुमुलिद मुरलालोल कल्लोलमाला।

एते गोदावरीए लहरि परिचिदा दिण्णसिप्पा कडप्पा
कंदप्पोद्दी वणेच्छा गहिद विहरणा दाहिणा एन्ति वाआ।।४४।।

*सं० छाया-* कावेरीनालिकेरी तरल न निपुणा नर्मदा नर्मकाराः
काञ्च्याश्चम्बनाद्री स्तुमुलित मुरला लोल कल्लोलमालाः।

एते गोदावर्या लहरिपरिचिता दत्तसि प्राकट प्राः
कंदर्पोद्दीपनेच्छागृहीत विहरणा दक्षिणा यान्ति वाताः।।४४।।

*हिन्दी-अनुवाद-* *(दूसरी ओर मुँह करके।) कावेरी नदी के किनारे होने वाले नारियलों को तरल (सजल) बनाने में निपुण, नर्मदा नदी का परिहास (विनोद) करने वाले काञ्ची नगरी के चम्बानद से आर्द्र होने वाले मुरला नदी के चंचल तंरगों से परिचित और सिप्रा नदी को शीतलता प्रदान करने वाले और कन्दर्प को उद्दीपित करने की इच्छा आग्रहयुक्त विहार करने वाले ये दक्षिण पवन बह रहे हैं। ।।४४।।*

*राजा-* क्वचिदविषये वा सारङ्गीतरङ्गित लोचना
हृदि कवचितः पञ्चेषुर्मे विकुञ्चित कार्मुकः।

अयमपि बत प्राप्तश्चूताङ्कुरा कुलकोकिला
कलरवजयोद्घोषः कालः किमत्त समीहितम्।।४५।।

*हिन्दी-अनुवाद-* *अथवा हरिणी के समान चंचल नेत्रों वाली बाला कहीं, दृष्टि से परे स्थान में है और मेरे हृदय में पञ्चबाण (कामदेव) कवच से*

*युक्त एवं धनुष ताने हुए है। खेद है कि यह आम के अंकुरों से भरी कोयलों की मधुर ध्वनि में जय का उद्घोष करने वाला समय आ गया है। यहाँ क्या अभीष्ट होगा ? ।।४५।।*

*(सनिर्वेदोत्कण्ठम्।)*

**आवासः किलकिञ्चितस्य जयिता पाश्वे विलासालसा**
**कर्णे कोकिल कामिनी कलरवः स्मेरो लतामण्डपः।**

**गोष्ठी सत्कविभिः समं कतिपयैर्मुग्धाः सुधांशोः कराः**
**केषांचित्सुखयन्ति चात्र हृदयं चैत्रे विचित्रोत्सवे।।४६।।**

***हिन्दी-अनुवाद***- *(खेद और उत्कण्ठा के साथ)*

*किलकिञ्चित् नामक हाव विशेष का निवास, बगल में आमोद प्रमोद सेअलसाई हुई प्रियतमा, कानों में कोयल एवं कामिनी का कलरव, विकसित लतामण्डप कुछ सत्कवियों के साथ वार्तालाप तथा चन्द्रमा की सौम्य किरणें यहाँ विचित्र उत्सव वाले चैत्र में किन्हीं लोगों के हृदय को सुख पहुँचाती हैं।।४६।।*

*सम्प्रति*

**कुर्वन्ति कोकिलकलोपहतिं लतासु**
**रुन्धन्ति वासभवनेषु समीर मार्गान्।**

**किं तन्न यद्विरहिणी निवहस्य सख्यः**
**सावज्ञमाकुल तया कलयन्त्यजस्रम्।।४७।।**

***हिन्दी-अनुवाद***- *इस समय,*

*वियोगिनियों की सखियाँ लताओं पर कोयलों के बोलने से रोकती हैं, और रहने के गृहों में पवन के मार्गो में रुकावट डालती हैं। ऐसा कौन सा उपाय है, जिसे वे व्याकुलता के कारण अवहेलना पूर्वक निरन्तर करती रहती हैं।।४७।।*

*(विचिन्त्य) तत्क्वायमात्मा विनोदयितव्यः।*

**हिन्दी-अनुवाद-** *(सोच कर) तब मनोविनोद कहाँ करना चाहिए?*

**विदूषक-** *भो वअस्स, अहिणवमहुरसतरङ्गिद ललिद लदालिङ्गिद कुसुमहसिद तरुण तरुमण्डलं कुण्डलिद कोदण्ड चण्डप्पहार पडुमअण सुहडपज्जलि ज्जन्त सहआरङ्कुर सिलीमुहं रज्जन्तकण्ठकलअण्ठ चारूपञ्चमस्सर महुरिज्जन्तं मअणुज्जाणं पेक्खन्तो णिव्वुइं उव्वहिस्सदि भवं।*

**सं० छाया-** *भो! वयस्य, अभिनव मधुरस तरङ्गित्त ललितलता लिङ्गित्त कुसुमहसिततरुणतरुमण्डलं कुण्डलितकोदण्डचण्ड प्रहारपटु मदनसुभट तीक्ष्णी क्रियमाण सहकाराङ्कुर शिलीमुखं रज्यत्कण्ठ कलकण्ठ चारू पञ्चमस्वरमुखरी क्रियमाणं मदनोद्यानं पश्यन्निर्वृतिं मुद्वीक्ष्यति भवान्।*

**हिन्दी-अनुवाद-** *हे मित्र! एकदम नवीन (ताजा) मधुर रस से लहराते हुए सुन्दर लताओं से आलिङ्गित्त और पुष्पों से हँसते हुए तरुण वृक्षों के समूह वाले, कुण्डलाकार धनुष से प्रचण्ड प्रहार करने में निपुण कन्दर्प के सुवीरों द्वारा तीक्ष्ण किये जाते हुए अति सुगन्धित आम्रवृक्षों के अकुंरो पर स्थित भौंरो वाले तथा सुरीले स्वर वाले, कोकिलों के सुन्दर पञ्चम स्वर से मुखरित किये जाने वाले मदनोद्यान को देखते हुए आप प्रसन्नता का अनुभव करेंगें।*

**राजा-** सहृदयों मे वयस्य

यत्कोकिलाकलरवं कलयत्यनङ्ग-
ञ्चूताङ्कुरं धनुषि यद्विजयास्त्रहेतोः।

यच्च स्मितं सुमनसां स समित्प्रपञ्चो
जीवातवे विरह पावक डम्बरस्य।।४८।।

**हिन्दी-अनुवाद-** राजा- मेरा मित्र सहृदय है।

कामदेव, जो विजय अस्त्र के लिए कोयल की मधुर ध्वनि को धनुष में, आम के अंकुर को और प्रसन्न चित्त पुरूषों की मुस्कराहट को प्रयोग में लाता है वह युद्ध का प्रपञ्च वियोगदग्ध पुरूष के पुनर्जीवन के लिए होता है। ।।४८।।

**विदूषक-** भो, एत्थ कहिं पि भविस्सदि देव्ववसेण दंसण गोअरे सा तेल्लोक्कसुन्दरीति भणामि।

**सं० छाया-** भोः, अत्र कुत्रापि भविष्यति दैववशेन दर्शनगोचरे सा त्रैलोक्य सुन्दरीति भणामि।

**हिन्दी-अनुवाद-** अजी, यहाँ कहीं भी वह त्रिभुवनसुन्दरी भाग्यवश दृष्टिगोचर हो जायेगी, यह मैं कहता हूँ।

**राजा-** एवमस्तु। उपदिश पन्थानम्।

**हिन्दी-अनुवाद-** ऐसा ही हो ! मार्ग बताओ।

**विदूषक-** इदो सेवागदणरिन्द सहस्ससंकिण्णं विलाससंचिअतेल्लोक्क सुन्दरजणं अत्थाणङ्गणं परिहरिअ चउक्किआए खिडिक्किआदो रअणदुआरिआए णीसरीअ कहिं पि एदु भवं।

**सं० छाया-** इतः सेवागत नरेन्द्र सहस्रसंकीर्ण विलास संचित त्रैलोक्यसुन्दर जनमास्थानाङ्गणं परिहृत्य चतुष्किकाया गवाक्षाद्रत्न द्वारिकाया निःसृत्य कुत्राप्येतु भवान्।

**हिन्दी-अनुवाद-** यहाँ सेवा के लिए आये हजारों राजाओं से व्याप्त विलास के. लिए एकत्रित तीनों लोक के सुन्दर सुन्दर जनों वाले सभाभवन के प्राङ्गण को छोड़कर तालाब के रत्न निर्मित द्वार की खिड़की से निकल कर कहीं भी आप आइए।

(इति परिक्रामतः।)

*(ऐसा कहकर दोनों चले जाते हैं।)*

**विदूषक-** *इदं तं कोइलपढिज्जन्त चारूपञ्चभाभिहाण मअणमन्त संमोहन मढं संतत ट्ठाणं वसन्त सुहडस्स। ता पविसदु पिअवअस्सो।*

**सं० छाया-** *इदं तत्कोकिलपठ्यमान चारू पञ्चमाभिधान मदनमन्त्रसंमोहन मठं? संत तास्थानं वसन्त सुभटस्य। तत्प्रविशतु प्रियवयस्यः।*

**हिन्दी-अनुवाद-** *यह वही कोयल के द्वारा गाये जाने वाले सुन्दर पञ्चम स्वर नामक मदन के संमोहन मंत्र का मन्दिर है जो महावीर वसन्त का सनातन स्थान है। इसलिए प्रिय मित्र प्रवेश करें ।*

*(यह कह कर दोनों वैसा करते हैं।)*

**विदूषक-** *पिअवअस्स, पेक्ख।*

**लाडीतण्डव केलिखिन्न चरणच्छाआलवं पल्लवं**
**कङ्केली पअढेदि पाडलितरू जादो पसूणञ्चिदो।**

**एदं कुङ्कुमसिक्ककीर रमणी गण्डप्पहं चम्पकं**
**कम्पावेइ विओइणीओ बउलो फुल्लेहिँ सल्लेहिँ व।।४६।।**

**सं० छाया-** *प्रियवयस्य, पश्य।*

**लाटी ताण्डवकेलिखिन्न चरणच्छायालवंपल्लवं**
**कङ्केलिः प्रकटयति पाटलितरुर्जातः प्रसूनाञ्चितः।**

**एतत्कुङ्कुमसिक्त कीर रमणी गण्डप्रभं चम्पकं**
**कम्पयति वियोगिनीर्बकुलः पुष्पैः शल्यैरिव।।४६।।**

**हिन्दी-अनुवाद-** *प्रिय मित्र ! देखिए ।*

*अशोक वृक्ष, लाटदेश की रमणी के नृत्य क्रीड़ा में थके हुए पैर की कान्ति के समान पल्लव प्रकट कर रहा है। पाठर का पेड़ पुष्पों से लदा है। यह चम्पा पुष्प केसर से सिक्त कश्मीर की*

सुन्दरी के कपोल स्थल की आभा के समान होने से और मौलसिरी शल्य तुल्य फूलों से विरहिणी स्त्रियों को कम्पित कर रहा है। ।।४६।।

(इति संस्कृतमाश्रित्य)

कुर्वाणाः प्राणनाथे प्रणयकलिरुषं जर्जरां गुर्जरीणां
भिन्दानाः सान्द्रमान ग्रहपटिममदं भेद पाटाङ्गनानाम्।
उन्मीलन्मालवस्त्री वदनपरिमल ग्राहिणो हूणरामा-
कामारम्भश्रमाम्भः कणहरण रसोल्लासिनो वान्ति वाताः।।५०।।

हिन्दी-अनुवाद- (संस्कृत का आश्रय लेकर)

गुर्जर (गुजरात) देश की स्त्रियों के (अपने) प्राणनाथ के प्रति प्रणयकलह में उत्पन्न क्रोध को जर्जर (शान्त) करते हुए, मेदपाट की रमणियों के सघन मान करने की पटुता के गर्व को चूर्ण करते हुए, मालवा की सुन्दरियों के खुले हुए मुख से सुगन्ध ग्रहण करते हुए और हूण जातीय स्त्रियों के संभोगकालिक श्रम से उत्पन्न पसीने की बूँदों को मिटा कर आनन्द देते हुए पवन बह रहे हैं।।५०।।

राजा- (सोपहासम्।) अहोवर्णनाक्रमः। (इति निःश्वस्य समन्तादवलोक्य च।)

हिन्दी-अनुवाद- राजा- (उपहास के साथ।) अहा! वर्णन का क्रम (ढंग) कैसा है? (यह कह कर लम्बी साँस लेकर चारों ओर देखता है।)

लीलोद्याने चलकिसलयाः शाखिनः खेललोला-
श्लिष्यद्भृङ्गावलिवलयिता भान्ति यावन्त एते।
कोपावेशाद्वलयित धनुर्बद्ध गोधाङ्गुलित्र-
स्तावभ्द्यो ऽपि त्रिभुवनजयी धावतीवासमास्त्रः।।५१।।

एहि तस्यास्तरङ्गशालाया अभ्यन्तरे क्षणमुपविशावः।
(तथा कुरुतः)

**हिन्दी-अनुवाद-** लीला उद्यान में हिलते हुए नवपल्लव वाले तथा क्रीडा में चंचल होने से चिपकती हुई भ्रमरावली से आवेष्टित ये जितने वृक्ष शोभित हो रहें हैं, उन सब पर क्रोधावेश से वलयाकार धनुष लिए हुए तथा गोह के चमड़ेका दस्ताना पहने हुए त्रैलोक्य विजयी कामदेव दौड़ लगा रहा है। ।।५१।।

आओ ! उस तरंगशाला के भीतर कुछ देर बैठें ।

(दोनों वैसा करते हैं।)

**विदूषक-** (भित्तिमवलोक्य स चमत्कारम्।) अए, का एसा पच्चाएसो उव्वसीपमुहाणं अच्छाराणं सव्वङ्गलडहा आलिहिदा।

**सं० छाया-** अये, कैषा प्रत्यादेश उर्वशी प्रमुखाणामप्स रसां सर्वाङ्गलटभालिखिता।

**हिन्दी-अनुवाद-** (दीवाल को देखकर, चमत्कार के साथ)

अरे, यह उर्वशी आदि अप्सराओं को नीचा दिखाने के रूप में यह कौन सर्वांङ्ग सुन्दरी चित्रित की गयी है?

**राजा-** (अवलोक्योत्थाय च।)

**एतत्तदेव सितदेवतरू प्रसून-**
**सौभाग्यमङ्गकमनङ्ग विलासवेश्म।**

**जैत्रः स एव च विलोचनयोर्विलासः**
**सैवेन्दु सुन्दरमुखी लिखिते यमास्ते।।५२।।**

**हिन्दी-अनुवाद-** राजा - ( देखकर और उठ कर)

यह वही श्वेत कल्पवृक्ष के फूलों के समान लावण्य या सुकुमारता से युक्त अङ्ग समूह है, जो कामदेव के विलास का घर है। वही नेत्रों का जयशील विलास है, और वही चन्द्रमा के समान सुन्दर मुखवाली यह चित्रित है।।५२।।

अपि च-

सैवोन्मज्जत्कनककलश प्रेक्षणीय स्तनुश्री-
मूर्तिर्लोकत्रय विजयिनी राजधानी स्मरस्य।
एतच्चक्षुस्तदपि विदलत्केतकी पत्रमित्रं
छाया सेयं नियतमधरे विद्रुमोत्सेक मुद्रा।।५३।।

हिन्दी-अनुवाद- (और भी) जल से निकले हुए सोने के घड़े के समान दर्शनीय शरीर की शोभा वही है। (यह) मूर्ति तीनों लोक को जीतने वाली तथा कामदेव की राजधानी है। यह नेत्र भी विभक्त हुए केवड़ेके पत्र के समान है। वही कान्ति निश्चित रूप से अधर में है जहाँ मूँगे की छिड़काव की मुद्रा है। ।।५३।।

विदूषक- भो, एसा चित्ते केण विलिहिदा।

सं० छाया- भोः एषा चित्रे केन विलिखिता।

हिन्दी-अनुवाद- अजी, यह चित्र किसने बनाया है?

राजा- मम तावन्मकरकेतुना। इह तु न जाने।

हिन्दी-अनुवाद- मेरा तो कामदेव ने। यहाँ तो नहीं जानता हूँ।

विदूषक- भो, भणामि किं पि जइ मे वअणं करेसि।

सं० छाया- भोः, भणामि किमपि यदि मे वचनं करोषि।

हिन्दी-अनुवाद- मैं कुछ कहता हूँ, यदि मेरी बात मानो।

राजा- किं न कथयसि?

हिन्दी-अनुवाद- क्यों नहीं कहते हो?

विदूषक- ओसरीयदु इमादो तरङ्ग साला दो तुरिदम्। कदापि देवी एत्थ आअच्छेदि।

**सं० छाया-** अपस्रियतामस्यास्तरङ्ग शालाया स्त्वरितम्। कदापि देव्यत्रागच्छति।

**हिन्दी-अनुवाद-** इस तंरगशाला से शीघ्र निकल चलो। कदाचित देवी यहाँ आ जाँय।

**राजा-** कुपिता कथमागच्छति सौभाग्याभिमान खण्डनानुप्रवेशात्।

**हिन्दी-अनुवाद-** वह कुपित है। कैसे आयेगी ? ऐसा करने से सौभाग्य के अपमान का खण्डन प्रविष्ट हो जायेगा या सौभाग्याभिमान खण्डित हो जायेगा ।

(ततः प्रविशति हारलतया, सह देवी। )

**देवी-** हारलते, ता कआपराधं पेक्खिअ एण्हिं सअं अणुसरन्ती अज्जउत्तेण केरिसी भणिआमि।

**सं० छाया-** हारलते, तत्कृतापराधं प्रेक्ष्याधुना स्वयमनु सरन्त्यार्यपुत्रेण की दृशी भण्ये।

**हिन्दी-अनुवाद-** (तदनन्तर हारलता के साथ देवी का प्रवेश)

हारलता, उनके किए हुए अपराध को देख कर इस समय स्वयं अनुसरण करती हुई मुझे आर्यपुत्र क्या कहेंगे?

**हारलता-** भट्टिणी, महानुभाव त्ति किं अण्णम्।

**सं० छाया-** भटिट्नि, महानुभावेति किमन्यत्।

**हिन्दी-अनुवाद-** महारानी, महानुभावा (उच्चविचारवाली ) कहेंगें और क्या?

**देवी-** जदि दिट्ठआ परूसत्तण मुव्वहामि अज्जउत्तो आअसीअदि। अणुचिदकारिणी भवामि।

**सं० छाया-** यदि दिष्ट्या परूषत्वमुद्वहामि आर्यपुत्र आद्यास्यते। अनुचितकारिणी भवामि।

**हिन्दी-अनुवाद-** यदि भाग्य से कठोरता धारण करती हूँ तो आर्यपुत्र को आयास करना पड़ेगा । मैं अनुचित करने वाली हो जाऊँगी।

**हारलता-** देवीए विणा अण्णो को एदं मन्तेदि। विणा मअङ्कलेहं कुदो जोण्हाए विसरो।

**सं० छाया-** देव्या विनान्यः क एतन्मन्त्रयते। विना मृगाङ्कलेखां कुतो जोत्स्नाया विसरः।

**हिन्दी-अनुवाद-** महारानी को छोड़कर दूसरा कौन यह विचार करेगा ? चन्द्रमा के बिना चाँदनी कहाँ से फैलेगी?

**देवी-** अवि जाणासि किं उदिद्सिअ अज्जउत्तेण सिविणए पलविदम्।

**सं० छाया-** अपि जानासि किमुदिद्श्यार्यपुत्रेण स्वप्ने प्रलपितम्।

**हिन्दी-अनुवाद-** अरी, जानती हो, किस उद्देश्य से आर्यपुत्र ने स्वप्न में प्रलाप किया ?

**हारलता-** तुज्झव सेक्क जीविदस्स णत्थि अण्णावाणी। एवं विधा जेव्व सिविणआ (अ) विप्पलम्भका होन्ति। ण किं पि आसङ्कणिज्जम्।

**सं० छाया-** त्वद्वशैकजीवितस्य नास्त्यान्या वाणी। एवं विधा एव स्वप्ना (च) विप्रलम्भका भवन्ति। न किमप्याशङ्कनीयम्।

**हिन्दी-अनुवाद-** एक मात्र आपके वश में जीवन होने वाले की दूसरी वाणी नहीं होगी। इस प्रकार के स्वप्न ही वियोग कराने वाले होते हैं। कुछ भी आशङ्का नहीं करनी चाहिए।

(इति परिक्रामतः)
(यह कह कर दोनों घूमती हैं।)

**देवी-** कण्णसुन्दरी अज्जउत्तस्य दंसणगोअरं गदा।

**सं० छाया-** कर्णसुन्दरी आर्यपुत्रस्य दर्शनगोचरं गता।

**हिन्दी-अनुवाद-** कर्णसुन्दरी आर्यपुत्र की दृष्टि में आ गयी है।

हारलता- *रवि किरणाणं वि अगम्मे त्ति कधं एदम्। 'पुरोऽवलोक्य' एसो तरङ्गसालाए भट्टा वट्टदि। ता उपसप्पीअदि।*

सं० छाया- *रवि किरणानामप्यगम्येति कथमेतत्। एष तरङ्गशालां भर्ता वर्तते। तदुपसर्प्यते।*

हिन्दी-अनुवाद- *सूर्य किरणों के लिए भी अप्राप्य होने से यह कैसे हो सकता है? (आगे देखकर) ये स्वामी तरंगशाला में विराजमान हैं इसलिए पास चलें।*

देवी- *किं पि सुणन्तीओ उपसप्पम्ह।*

सं० छाया- *किमपि शृण्वत्य उपसर्पावः।*

हिन्दी-अनुवाद- *कुछ सुनते हुए पास चलें।*

राजा- *(बद्धाञ्जलिः।)*

**आयासः किमयं वृथैव धनुषो देव स्मर स्वीकृत-**
**स्त्वत्पत्रिव्ययपात्रमत्र कतमः कात्यायनी कामुकः।**
**एतां लोकविलक्षणेन विधिना केनाऽपि येनासिषी**
**(यायां?) चित्रगतामपि प्रियतमां संजीव्य संप्रापय।।५४।।**

हिन्दी-अनुवाद- राजा *(हाथ जोड़कर)*

*हे कामदेव ! यह धनुष (उठाने) का प्रयास क्यों? स्वीकार किया? तुम्हारे बाण छोड़ने का पात्र यहाँ कौन गौरीपति (महादेव) हैं? जिस किसी भी लोकोत्तर प्रकार से, चित्रगत होने पर भी इस प्रियतमा को भलीभाँति जीवित करके (मुझे) प्राप्त करा दो।।५४।।*

देवी- *कस्स कदे अज्जउत्तो एवं मन्तेदि।*

सं० छाया- *कस्य कृते आर्यपुत्र एवं मन्त्रयते।*

हिन्दी-अनुवाद- *किसके लिए आर्यपुत्र ऐसी मंत्रणा कर रहे है?*

**हारलता-** कस्स अण्णस्स। भोदिं जेव्व कुविदं जाणिअ चित्तपडिबिम्बेण अप्पाणं विणोदेदि भट्टा। ता उपसप्पीअदु।

**सं० छाया-** कस्यान्यस्य। भवतीमेव कुपितां ज्ञात्वा चित्रप्रतिबिम्बेनात्मानं विनोदयति भर्ता। तदुपसर्पताम्।

**हिन्दी-अनुवाद-** दूसरे किसके लिए । आप ही को कुपित जानकर चित्र के प्रतिबिम्ब से स्वामी मनोविनोद कर रहे हैं इसलिए पास चलें।

*(तथा विधत्तः।)*

*(वैसा करती है।)*

**देवी-** जेदु अज्जउत्तो।

**सं० छाया-** जयत्वार्यपुत्रः।

**हिन्दी-अनुवाद-** आर्यपुत्र की जय हो।

**हारलता-** जेदु जेदु भट्टा।

**सं० छाया-** जयतु जयतु भर्ता।

**हिन्दी-अनुवाद-** स्वामी की जय हो, जय हो।

**देवी-** (सविनयम्) मए एव्व तदा किं पि खलिदं ति अज्जउत्तेण ण अण्णधा भणिदव्वम्।

**सं० छाया-** मयैव तदा किमपि स्खलितमित्यार्य पुत्रेण नान्यथा भणितव्यम्।

**हिन्दी-अनुवाद-** (विनयपूर्वक) मैंने ही उस समय कुछ गलती की। आर्यपुत्र को अन्यथा नहीं कहना चाहिए।

**राजा-** त्रिजगति भवती परं ममैका
दिशति मुदं कुमुदस्य कौमुदीव।

प्रभुरसि कुरूषे रूषं कदाचिद्व्रजसि
कदापि यथारूचिं प्रसादम्।।५५।।

हिन्दी-अनुवाद- तीनों लोक में एक आप मुझे परम आनन्द प्रदान करती हैं जैसे कौमुदी (चाँदनी) कुमुद को (आनन्द ) देती है। आप स्वामिनी हैं रुचि के अनुसार कभी आप क्रोध करती हैं और कभी प्रसन्नता प्रकट करती हैं।।५५।।

विदूषक- महाणुभावा देवी जा एवं पतिच्छत्तणं धारेदि।

सं० छाया- महानुभावा देवीं यैवं पत्यनुकूलत्वं धारयति।

हिन्दी-अनुवाद- देवी बड़े उच्चविचार की हैं जो इस प्रकार पति की अनुकूलता धारण करती हैं।

देवी- चित्रमवलोक्यापवार्य च) हारलदे, पेक्ख। कण्णसुन्दरिं जेव्व आलिहि अ अप्पाणअं विणोदेदि। तुमं तु मम ण पत्तिज्जसि। अहं जेव्व अविभिस्स कारिणिति किं भणीअदि।

सं० छाया- हारलते, पश्य! कर्णसुन्दरी मे वालिख्यात्मानं विनोदयति। त्वं तु मम न प्रत्ययसे। अहमेवाविमृश्यकारणीति किं भण्यते।

हिन्दी-अनुवाद- (चित्र देखकर, अलग होकर) हारलता देखो, कर्णसुन्दरी का ही चित्र बनाकर मन को बहला रहे हैं। तुम तो मेरा विश्वास नहीं करती हो । मुझे ही बिना विचारे काम करने वाली क्यों कहा जाता है?

हारलता- तथैव

हिन्दी-अनुवाद- वैसा ही है।

देवी- (प्रकाशम्।) अज्जउत्त, इदं ण अणविणोदणं मए आगदुअ विनि वट्टिदं जेव्व। संपदं पेक्खिदव्वम्। (इति सावेगमुत्तिष्ठति।)

सं० छाया- आर्यपुत्र, एतन्नयन विनोदनं मया गत्य विनिवर्तितमेव। साम्प्रतं प्रेक्षितव्यम्।

**हिन्दी-अनुवाद-** *(प्रकट रूप से) आर्यपुत्र! यह नेत्रों का विनोद मैंने ही आकर बाधित किया। अब देखिए।*

*(यह कह कर तेजी से उठ जाती है।)*

**राजा-** अलमन्यथा संभावितेन। *(इति वारयति।)*

*(देव्याक्षिप्य हारलतया सह निष्क्रान्ता।)*

**हिन्दी-अनुवाद-** अन्य प्रकार की संभावना करना व्यर्थ है *(यह कह कर रानी को रोकता है।)*

*(देवी झटक कर हारलता के साथ चली जाती हैं।)*

**राजा-** एहि तावत्। देवी प्रसादनाय प्रयतावहे।

*(इति निष्कान्ताः सर्वे।*

इति प्रथमोऽङ्कः

**हिन्दी-अनुवाद-** राजा-आओ तो । देवी को प्रसन्न करने के लिए प्रयत्न करें।

*(यह कह कर सब चले गए)*

**"पहला अङ्क समाप्त"**

## द्वितीयोऽङ्कः

(ततः प्रविशति सुप्तोत्थितो विदूषकः)

**विदूषकः-** *(अङ्गुलीभ्यामक्षिणी मृजन्)* अज्ज पिअवअस्सेण दिग्धरोसं देविं पसादिअ मे किं पि समादिट्ठम्। तदादिट्ठत्थदूणो मञ्जिट्ठारूणेण अरूणसार हिमण्डलेण सान्दअन्तेणं रअणिं जागविओम्हि। ण सक्कणोमि सअणिज्जादो णिद्दाए बलामोडिमीलिज्जन्त दिट्ठी उट्ठिदुम्। पिअवअस्सचलण वडण संतुट्ठदेवी पसादलद्धेहिं मोएदहिं पुट्ठभुइट्ठंचिट्ठदि मेउअरम्। णि हुअं अववर अअन्तरे सुवामि। *(स्मृतिमभिनीयं)* अहवा कहं सुविअदि। जं पि अवअस्सेण तीए विज्जाहरकण्ण आए पउत्तिं जाणिदुं किं सा वि वअस्ससाणु राआण वेत्ति आणत्तम्हि। ता जाव गदुअ काए वि अन्तेउरविलासिणीए सआसादो अण्णापदेसेण जाणिस्सम्। कहं उवलतरङ्ग तरङ्गवदित्तिणामहेआ इदो ज्जेव्व आअच्छदि। भोदु। एताए जेव्व मुहादो जाणिस्सम्। (पुनरवलोक्य) मं पेक्खिअ एदाए किं पि अपच्छादिदम्। *(निरूप्य सशिरः कम्पम्।)* अत्थि एत्थ वडे जक्खो। भोदु। संभाविअ जाणामि। *(इति तथा करोति।)*

**सं० छाया-** अद्य प्रियवयस्येन दीर्घरोषां देवीं प्रसाद्य मे किमपि समादिष्टम्। तदादिष्टार्थदूनो मञ्जिष्ठारूणेनारूण सारथिमण्डलेन सान्द्रायमाणेन रजनिं जागरितोऽस्मि। नशक्नोमिं शयनीया न्निद्रया हठान्मील दृष्टि रुत्थातुम्। प्रियवयस्य चरण-पतन संतुष्ट देवी प्रसाद लब्धै र्मोदकैः पुष्टभूयिष्ठं तिष्ठति मे उदरम्। निभृतमपवरकान्तरे स्वपिमि। अथवा कथं सुप्यते। यत्प्रियवयस्येन तस्या विद्याधर कन्यकायाः प्रवृत्तिं ज्ञातुं किं सापि वयस्यसानुरागा न वेत्याज्ञप्तोऽस्मि। तद्यावद्गत्वा कस्याअप्यन्तः पुरविलासिन्याः सकाशादन्यापदेशेन ज्ञास्यामि। कथमुत्पलतरङ्गा तरङ्ग वतीतिनाम-धेया इत एवागच्छति। भवतु। अस्या एव मुखाज्ज्ञास्यामि। मां

प्रेक्ष्यैतया किमप्यपच्छादितम्। अस्त्यत्र वटे यक्षः। भवतु। संभाव्य जानामि।

**हिन्दी-अनुवाद-** विदूषक- (अँगुलियों से आँखों को मलते हुए।) आज प्रियमित्र ने लम्बे समय तक क्रोध करने वाली देवी को प्रसन्न करके मुझे भी कोई आदेश दिया है। इसलिए अभीष्ट प्रयोजन से पीड़ित मैं मजीठ के समान लाल एवं सघन होते हुए सारथि अरुण के मण्डल के कारण रात भर जागता रहा हूँ (इसलिए) निद्रा से हठात् बन्द होती हुई दृष्टिवाला मैं शय्या से उठने के लिए असमर्थ हूँ। प्रिय मित्र के पैरों पर गिरने से सन्तुष्ट देवी की कृपा से पाये हुए लड्डुओं से मेरा पेट बहुत भरा हुआ है। (इसलिए) दूसरे शयनागार में चुपचाप सो जाता हूँ। (स्मरण करने का अभिनय करके) अथवा कैसे सोऊँ? क्योंकि प्रियमित्र ने उस विद्याधर कन्या का हालचाल जानने के लिए कि वह भी मित्र के प्रति अनुराग रखती है या नहीं यह मुझे आदेश दिया है इसलिए जाकर अन्तःपुर में रहने वाली किसी भी स्त्री से दूसरे के बहाने जानूँगा। कमल के समान तरङ्ग वाली तरङ्गवती नाम की परिचारिका इधर ही आ रही है। अच्छा! इसी के मुख से जानूँगा (पुनः देखकर) मुझे देखकर इसने कुछ छिपा लिया है। (अच्छी तरह देखकर सिर हिलाते हुए ) इस वटवृक्ष पर यक्ष रहता है। अच्छा! संभावित करके जान लेता हूँ। (वैसा करता है।)

(ततः प्रविशति तरङ्गवती।)

**तरङ्गवती-** (अग्रतोऽवलोक्य।) एस दुट्ठवडू पेक्खिस्सदि एदं सिसिरोवआरम्। ता अण्णदो गच्छामि। (इति तथा गच्छति।)

**सं० छाया-** एष दुष्टवटुः प्रेक्षिप्यत एतच्छिशिरोपचारम्। तदन्यतो गच्छामि।

**हिन्दी-अनुवाद-** (तदनन्तर तरंगवती प्रवेश करती है।)

तरङ्गवती- (आगे देखकर) यह दुष्ट ब्राह्मण बालक इस ठंढ़ाई के उपचार को देख लेगा। इसलिए दूसरी ओर जाती हूँ। (यह कह कर दूसरी ओर जाती है।)

विदूषक- (सत्वरमुपसृत्य।) भोदि, कीस अण्णदो गच्छीअदि। अहं तुह ससिलेहाए विअ मग्गं पलोएमि। तुमं राहुंवमं पलिहलसि। किं ण्णेदम्।

सं० छाया- भवति, कुतोऽन्यतो गम्यते। अहं तव शशिलेखाया इव मार्गं प्रलोकयामि। त्वं राहुमिव मां परिहरसि। किं न्वेतत्।

हिन्दी-अनुवाद- (शीघ्रता से पास जाकर।) शुभे! क्यों दूसरी ओर जा रही हो? मैं चाँदनी की तरह तुम्हारी बाट जोह रहा हूँ। तुम राहु की तरह मुझे छोड़ रही हो। ऐसा क्यों?

तरङ्गवती- अज्ज, कज्जन्तरपज्जा उलहि अ अत्तेण ण लक्खिदोसि। पसीददु भवं।

सं० छाया- आर्य, कार्यान्तर पर्याकुल हृदयत्वेन न लक्षितोऽसि। प्रसीदतु भवान्।

हिन्दी-अनुवाद- आर्य, दूसरे कार्य से व्याकुलहृदय होने के कारण आपको नहीं देखा। आप प्रसन्न हों।

विदूषक- अह केण वावारेण तत्तभोदी कण्णसुन्दरी वट्टदि।

सं० छाया- अथ केन व्यापारेण तत्र भवती कर्णसुन्दरी वर्तते।

हिन्दी-अनुवाद- अच्छा, माननीया कर्णसुन्दरी क्या कार्य करती हैं?

तरङ्गवती- णिअवावारे व्व सा पिअसही।

सं० छाया- निज व्यापारैव सा प्रिय सखी।

हिन्दी-अनुवाद- वह प्रिय सखी अपना ही कार्य करती है।

विदूषक- को उण णिअवावरो।

सं० छाया- कः पुनर्निज व्यापारः ?

हिन्दी-अनुवाद- अपना कार्य क्या है?

तरङ्गवती- देवी ए सआसे सिक्खदि लक्खणाणा भणुसीलिणानि, अमअणादो बहुविहाओ लीलाओ वि।

सं० छाया- देव्याः सकाशे शिक्षते लक्षणानामनुशीलनानि, अमदना बहुविधा लीलाअपि।

हिन्दी-अनुवाद- वह देवी के पास लक्षणों का अनुशीलन सीखती हैं और काम रहित अनेक प्रकार की लीलायें भी।

विदूषक- (विहस्य) अवरो को वि वावारो त्ति सुणीअदि।

सं० छाया- अपरः कोऽपि व्यापार इति श्रूयते।

हिन्दी-अनुवाद- (हँस कर ) दूसरा कोई और कार्य, यह सुना जाता है।

तरङ्गवती- (साशङ्कम्।) क इत्ति णिवेदेदु भवं।

सं० छाया- क इति निवेदयतु भवान्।

हिन्दी-अनुवाद- (शंकापूर्वक) कौन कार्य यह आप बताएँ?

विदूषक- जत्थ एदाणं विणिओओ। (इत्यस्या अंशुकान्तरात्कदलीपत्राणि मृणालिकाश्च लीलया गृह्णाति।)

सं० छाया- यत्रैतेषां विनियोगः।

हिन्दी-अनुवाद- जहाँ इन चीजों का उपयोंग होता है। (यह कह कर उसके वस्त्र के भीतर से कदली पत्र और कमल की जड़ लीलापूर्वक ले लेता है।)

तरङ्गवती- अज्ज, ण किं पि सङ्किदव्वम्। एदेहिं मम किं पि कज्जं अत्थि।

**सं० छाया-** आर्य, न किमपि शङ्कितव्यम्। एतैर्मम किमपि कार्यमस्ति।

**हिन्दी-अनुवाद-** आर्य कुछ भी शंका नहीं करनी चाहिए इनसे मेरा कोई कार्य है।

**विदूषक-** अविस्सासिणि, अलं अवलावेण। णणु पिअवअस्सेण पउत्तिं जाणिदुं पेसिदोम्हि। ता उज्जुअं कहेसु।

**सं० छाया-** अविश्वासिनी, अलमपलापेन। ननु प्रियवयस्येन प्रवृत्तिं ज्ञातुं प्रेषितोऽस्मि। तदृजुकं कथय।

**हिन्दी-अनुवाद-** अविश्वसनीये! अपलाप करना (छिपाना) व्यर्थ है। प्रिय मित्र ने वृत्तान्त जानने के लिए मुझे भेजा है इसलिए सीधे से बता दो।

**तरङ्गवती-** अज्ज, रक्खिदव्वं रहस्सभ्।

**सं० छाया-** आर्य रक्षितव्यं रहस्यम्।

**हिन्दी-अनुवाद-** आर्य, रहस्य को बचाना।

*(इति संस्कृतमाश्रित्य।)*

**यत्ताराररमणोऽपि निर्वृतिपदं नास्याश्वलच्चक्षुषो-**
**र्यद्गात्रं शतपत्रपत्रशयनेऽप्युत्फालमुद्वेल्लति।**

**शीतं यच्च कुचस्थलीमलयजं धूलीकदम्बायते**
**किं वान्यत्तदनङ्गमङ्गलमयी भङ्गी कुरङ्गी दृशः।।१।।**

*(इत्युक्त्वापसरति।)*

*(संस्कृत भाषा का आश्रय लेकर।)*

**हिन्दी-अनुवाद-** जो चन्द्रमा भी उसकी आँखों के लिए शान्तिस्थान नहीं हो रहा है, जो शरीर, कमलपत्रों की शय्या पर भी छटपटाहट की सीमा का अतिक्रमण करता है, जो कुचप्रान्त में लेपा गया शीतल श्रीखण्ड चन्दन धूलसमूह बन जाता है, वह और क्या है, मृगनयनी की कामजन्य मङ्गलमयी भङ्गिमा है।।१।।

*(यह कह कर चलने लगती है।)*

**विदूषक-** *(स परितोषम्।)* भोदि, संणिओअं असुण्णं करेसु। अहं पि पिअवअस्सं वड्ढावेमि।

**सं० छाया-** भवति, स्वनियोगमशून्यं कुरू। अहमपि प्रिय वयस्यं वर्धयामि।

**हिन्दी-अनुवाद-** *(सन्तोष के साथ)* शुभे! अपने कर्त्तव्य को पूरा करो। मैं भी प्रिय मित्र को बधाई देता हूँ।

*(यह कह कर दोनों चले जाते हैं।)*

**प्रवेशकः**

*(ततः प्रविशति सोत्कण्ठो राजाविदूषकश्च।)*

**राजा-** **धूमश्यामलि तेव तापनवशाच्चामी करस्यच्छवि**
**श्चन्द्रो मुक्त इव श्रिया किसलया निर्धौतरागा इव।**

**निः सारेव धनुर्लता रतिपतेः सुप्तेव विश्वप्रभाः**
**तस्याः किं च पुरो विभान्ति कदलीस्तम्भाः सदम्भा इव।।२।।**

**हिन्दी-अनुवाद-** *(तदनन्तर उत्कण्ठा से युक्त राजा और विदूषक का प्रवेश)*

उस सुन्दरी के आगे, तपाने के कारण सुवर्ण की कान्तिवाली जैसी, चन्द्रमा शोभाहीन जैसा नवपल्लव लालिमा रहित जैसे, कामदेव का धनुष निस्तत्व जैसा, संसार की प्रभा सोयी जैसी और केले के स्तम्भ दम्भी जैसे मालूम पड़ते हैं।।।२।।

**अपि च,**

**मुग्धाक्ष्याः कति नेन्दवः समुदिता वक्त्रे स्फुरत्कान्तयो**
**विश्रान्तिः कियतां न लोचनयुगे नीलाम्बुजानां श्रियः।**

**निष्पन्नः कियता न विद्रुमरुचां सारेण बिम्बाधरः**
**पीताश्चारुभिरङ्ग कैश्च कति न स्निग्धा मधूकत्विषः।।३।।**

**हिन्दी-अनुवाद-** और भी,

*सुनयना के मुख पर चमकती हुई कान्तियाँ (क्या) कुछ एकत्रित चन्द्रमा (जैसी) नहीं हैं? (अर्थात् अवश्य हैं।) दोनों नेत्रों में (क्या) कुछ नील कमलों की शोभा का विश्राम नहीं हो जाता है? (अर्थात् अवश्य होता है।) बिम्बाफल के समान अधर क्या मूँगों के कुछ सार भाग से बना हुआ नहीं है? (अर्थात् अवश्य है।) और सुन्दर अंगों ने क्या कुछ स्निग्ध महुए के फूलों की कान्तियों को पी नहीं लिया है? (अर्थात् अवश्य पिया है।)।।३।।*

*(अनुसंधाय।)*

**स्फुरल्लीलामालं किमपि रसयोगानमृगदृशः**
**क्षणं दीर्घापाङ्ग प्रणयि यदभून्नेत्रयुगलम्।**

**अहो हृज्जन्मान्तः स्फुरति बत मे शल्यमिव त-**
**द्यदावेगे मोहः परमयमविश्राम विषयः।।४।।**

*(अनुसंधान करके।)*

***हिन्दी-अनुवाद-*** *मृगनयनी के दोनों नेत्र, रस (श्रृंगारी भावना।) के योग से फड़कती हुई लीलाओं की श्रेणी से युक्त होकर क्षणभर के लिए लम्बे नेत्र-प्रान्तों के प्रेमी बन गए थे (अर्थात् कटाक्ष किया था। ) वह, खेद है कि कील की तरह मेरे हृदय में घुस कर फड़क रहा है, जिसके आवेग में महामोह अविश्राम का विषय हो गया है। (अर्थात् हट ही नहीं रहा है।)।।४।।*

*अहो, किमपि कमनीये वयसि वर्तते सुमध्यमा। तथाहि।*

**आभोगः कृत एव किं तु न गतिस्त्यक्ता कुचाभ्यां द्वयी**
**भ्रूलास्यैरवकीर्णमेव मिलितं नो किं तु सम्यग्दृशोः।**

**लीलाभिः परिरब्धमेव गमनं तन्व्या नितम्बोद्गम**
**प्राग्भारेण न किं तु मन्थर पदंन्यासस्तदा सूत्रितः।।५।।**

*सखे, अपि सत्यं तरङ्गवत्या वचः।*

